श्रीः

वाणीं भजत गैर्वाणीम्

# कथावल्लरी

सम्पादकः

डा. के. वि. रामकृष्णमाचार्यः




प्रकाशिका

संस्कृतभाषाप्रचारिणी सभा

चित्तूरु 517 001

1991

सर्वं सभाधीनम् रू. 5

श्रीः

वाणीं भजत गैर्वाणीम्

# कथावल्लरी

सम्पादकः

डा. के. वि. रामकृष्णमाचार्यः




प्रकाशिका

संस्कृतभाषाप्रचारिणी सभा

चित्तूरु 517 001

1991



रू. 5.00

# निवेदनम्

अभिज्ञाविद्यार्थिनां, तथैव संस्कृताभ्यासिनां च उपकाराय सरलसंस्कृतभाषायाम् इयं कथावल्लरी सङ्ग्रथिता। अस्याश्च वल्लर्याः अयमन्यो विशेषः यत् अस्यां स्थिताः कथाः सभायाः मासिक्यां पत्रिकायां प्रकाशिताः। ताः एव कथाः आवश्यक संस्करणैः अत्रोपविबद्धा इति वक्तुं मोमुदीति मेऽन्तरङ्गम्। अस्यां स्फूर्तिश्री महोदयस्य सत्यसायिकथावाहिनीतः सत्यमेव विजयते, उत्तमः धर्मः, प्रश्नत्रयं, सत्यान्नास्ति परो धर्मः दृष्टिभेदः इति पञ्च कथाः, विश्वासमहोदयस्य पञ्चतन्त्र कथाभ्यः चतुरशशककथाद्वयं, दुष्टैः सह वासः इति कथा, उपद्रष्ट वेङ्कटकृष्णय्यमहोदयस्य शर्मिष्ठा, मेडिशेट्टि शिव गणेशबाबु महोदयस्य ध्रुवचरितं, जीवकल भवानी मैथिल्याः अप्रशिखकथा च सन्ति। अतस्तेभ्यः कथा लेखकेभ्यः सर्वेभ्यः हार्दं कृतज्ञतावाक मभिवन्दनवाकेन सह सभापक्षतः निवेदयन् संस्कृतप्रेमिणः सम्प्रार्थये यदेतां वल्लरीं समादृत्य स्वीयं संस्कृतभाषापाटवं वर्धयितुम्।

इत्थं
विन्निवेदयिता
डा. कं. वें. रामकृष्णमाचार्यः
प्रकाशनाधिकारी

प्रमोद
माघपूर्णिमा

# विषयसूचिका





# सत्यमेव विजयते

कस्मिंश्चिद् ग्रामे चौर्यमेव जीवनोपाधिं कृत्वा कश्चित् युवकः कालक्षेपाय दिवा द्यूतं क्रीडति स्म। एकदा कश्चित् महापुरुषः बहून् प्रापञ्चिकान् आध्यात्मिकान् च विषयान् बोधयति स्म। 'मोक्षप्राप्तिरेव मानव जन्मनो लक्ष्यम्। तदर्थं सद्गुणाः, सत्प्रवर्तनं च आवश्यक मित्येवं सर्वसुबोधकं सुरुचिरम् आध्यात्मिकबोधनं करोति स्म।

तस्करन्युवकोऽपि तस्य प्रसङ्गं श्रोतुं गत्वा सर्वैः सह आसीनः आसीत्। अभिभाषणानन्तरं सर्वे श्रोतारः गताः। तस्करस्तदा महापुरुषस्य समीपमेत्य पादयोः पतित्वा 'स्वामिन्! मामपि कृपया तव शिष्येषु अन्यतमम् अङ्गीकुरु' इति प्रार्थयत्। 'वत्स! त्वं किं करोषि?' इत्यपृच्छत् गुरुः। 'स्वामिन्! अहं दिवा द्यूतं खेलामि। रात्रौ चौर्यं करोमि' इति प्रत्यवदत् चोरः। 'धिक्! धिक् कथमेतादृशं दुर्विनीतशिष्यं स्वीकरवाणि? अवश्यं तव प्रवृत्तिः त्याज्या' इत्युक्तवान् गुरुः।

'महात्मन्! न चौर्यं कदापि मया त्याज्यं भवेत्। तदेव मम वृत्तिः। कुटुम्बपोषणाय च किमप्यन्यन्मया न ज्ञायते। द्यूतः कालक्षेपाय स्वीकृतो विनोद एव। तं विना दिवा मे कालः कथं गच्छति? अतः द्यूतोऽपि त्यक्तुम् अशक्य एव' इत्युक्तं चोरेण।

चोरः यथार्थं भणतीति महापुरुषो ज्ञात्वा सन्तृप्तोऽभूत्। परं तेन किञ्चिदपि नोक्तम्। पुनरपि चोरः तस्य पादयोः शिरः निधाय 'स्वामिन्! अनुग्रहं कुरु। मां शिष्यं कृत्वा तव बोधामृतेन समुद्धर' इति साश्रुः अवादीत्।

महापुरुषः उवाच – 'बाढम्। तव दुर्गुणेषु कमप्येकं त्यज। त्वां शिष्यम् अङ्गीकरिष्यामि'।

'महाभाग! क्षणमेतम् आरभ्य असत्यं न वदिष्यामि इति चोरः प्रतिज्ञां कृतवान्।

'शुभं भवतु। एकामेव इमां प्रतिज्ञां सदीक्षः पालय' इत्याशीः दत्वा तं गुरुः अनुगृहीतवान्।

गच्छति काले स तस्करः राजभवने चौर्यं कर्तुमुद्युक्तः हर्म्यस्य उपरितलं प्राप। तत्र राजापि विनिद्रः वायुसेवनाय इतस्ततः संचरि तस्म। स तस्करस्य पदध्वनिं श्रुत्वा कस्तत्रेति पृष्टवान्। तस्करः तस्य समीपं गत्वा 'अहं चोरः' इत्यकथयत्।

आश्चर्यचकितोऽभूत् राजा। परंतु राजा स्वाकारं निगूह्य तस्य भुजस्कन्धे करं निधाय 'अहमपि चोर एव। अस्मिन् भवने सर्वमहं जानामि। आगच्छ। आवां द्वौ मिलित्वा एव चौर्यं कुर्वः' इत्यवदत्।

'तथैव । आवां चोरितस्य धनस्य समभागस्वामिनौ भवावः ।'

'तथास्तु । अहमन्तर्गत्वा कोष्ठस्य कुञ्चिका-मानयामि । त्वमत्रैव तिष्ठ ।' राजा कुञ्चिकाम् आनाय्य चोरस्य हस्ते निधाय 'गच्छ । तस्मिन् द्वितीयकोष्ठे राज-धनानि विद्यन्ते । अहमत्र स्थित्वा रक्षणोद्योगीव तव शुभागमनं प्रतीक्षे' इत्याह ।

चोरः तं कोष्ठं प्राविशत् । तत्रत्याः सर्वाः पेटिकाः उद्घाटितवान् । तत्रैका पेटिका चोरस्य मनः समाकर्षत् । तस्यां त्रीणि वज्राणि बहुमूल्यान्यासन् । तानि चोरः गृहीतवान् । झटित्येव तस्य हृदये तयोरुभयोः विभजन निर्णयः स्फुरितः । अतः सः विभजने क्लेशः मास्त्विति त्यालोच्य वज्रमेकं पेटिकायामेव त्यक्त्वा द्वे वज्रे मुष्टौ निधाय बहिरागच्छत् ।

'अयि भोः! इमे वज्रे! एकं तव । एकं मम । अन्यदपि वर्तते । परन्तु तत्रैव मया त्यक्तम् । तद् भवतु राज्ञः ।' इत्यवोचत् ।

राजा चोरस्य निवासविलासादिकमपृच्छत् । चोरः किञ्चित् सन्देहाकुलितः अभवत् । सपदि तस्य मनसि

महापुरुषाय गुरवे दत्तं वचनमुद्बुद्धम् । 'अस्तु यत्किञ्चित्। सत्यमेव कथयिष्यामि' इति मनसि निश्चित्य स राज्ञे स्वतिवासविलासादिकं सविस्तरमुक्त्वा अनुमतिं स्वीकृत्य गृहमगच्छत् ।

परस्मिन् दिने राजभवने चौर्यं जातमिति सर्वैः अवगतम् ।' राजा यथासमयं सभाम् आगच्छत् । सर्वं जानन्नपि सोऽज्ञातवृत्तान्त इव आसीत् । स सिंहासने उपविश्य मन्त्रिणं चौर्यं प्रति पृष्टवान् । मन्त्री श्रुतं दृष्टं च सर्वं राज्ञे निवेदितवान् । तत्सर्वं सावधानं श्रुत्वा राजा –

'महाशय! कोशागारं प्रविश्य तत्र किं किं चोरेण नीतमिति सविस्तरं परिशील्य वद' इति मन्त्रिणम् आज्ञापयामास ।

मन्त्री कोशागारं प्रविष्टवान् । परिशीलन मपि अकरोत् । सर्वाणि वस्तूनि यथावत् स्थितानि । एकैव पेटिकोद्घाटिता । तस्यामेकमेव वज्रं धगधगायते स्म । मन्त्री तत्संगृह्य वस्त्रांचले निगूह्य राजसमीपमागच्छत् ।

'महाराज! एतच्चौर्यं महच्चित्रम् । एकां पेटिकां विहाय सर्वं यथातथमस्ति । वज्रपेटिका शून्यत्ववाटिका कृता' इत्याह सः ।

राजा मन्त्रिणः कुतन्त्रं ज्ञात्वा, सपदि अभिज्ञान मुक्त्वा रक्षकभटान् चोरगृहं प्रति सम्प्रेष्य चोर मानायामास । राजानं चोरः दृष्ट्वापि नाभिज्ञातवान् ।

'त्वया कोशागारात् किं किं चोरितम्? सत्यं वद' इति पृष्टवान् राजा ।

'महाराज! अहं सत्यमेव वदामि । ह्यः चौर्याय आवां द्वौ समागतौ । परन्तु चौर्यं मयैव कृतम् । एकस्यां पेटिकायां त्रीणि वज्राणि आसन् । अर्धार्धविभागक्लेशं परिहर्तुं द्वे वज्रे एव मया स्वीकृते । ततः एकमन्यस्मै दत्त्वा एकमेवाहं स्वीकृतवान् ।'

'यदुक्तं चोरेणैतेन तदसत्यम् । प्रभो! कुत्र चोरः? कुत्र सत्यम्? अस्य वचनेषु विश्वासः न करणीयः' इति मन्त्री रुराव ।

राजा भटान् आहूय मन्त्रिणः वस्त्राणि परिशोधयितु माज्ञापयामास । भटाः राजाज्ञया मन्त्रिणः वस्त्राणि परिशोध्य वज्रमेकं बहिश्चक्रुः । मन्त्री सावमानः नतोत्तमाङ्गो बभूव ।

(क) 2

'मन्त्री न केवलं चोरः अपितु असत्यभाषी । भवन्तः एव तत्र प्रमाणम् । अयं चोरः वृत्त्या चोर एव! परन्तु निर्भीकः सत्यव्रतदीक्षश्च । अस्य सहचोरः अहमेव ।' इत्युक्त्वा राजा रात्रौ यद्वृत्तं तत्सर्वं सभ्येभ्यो विशदीचकार ।

चोरस्य सत्यव्रतं श्लाघमानः राजा मन्त्रिणः स्थाने तं नियम्य, असत्यभाषिणं मन्त्रिणं तत्स्थानाद् अपनीय कारागारे न्यवेशयत् ।

तदारभ्य चोरस्य जीवनचक्रं निर्वक्रम् अभूत् । चौर्यस्य आवश्यकतैव नासीत् तस्य । द्यूतार्थम् अवकाशोऽपि न लब्धः । स च स्तेनः मन्त्रिणः स्थाने सम्यक् व्यवहरन् श्रद्धाभक्तिसमन्वितः गुरुं सदा हृदये स्मरन् सत्यव्रतं दृढतया अनुससार ।

एकदा तस्य गुरुः महापुरुषः तं नगरमागच्छत् । शिष्यस्य अभ्युदयं श्रुत्वा नितरां सन्तोषं च प्राप । शिष्योऽपि तस्यागमनं ज्ञात्वा तं गुरुमुपगम्य पादयोः प्रणिपत्य 'स्वामिन्! भवदीयादेव दिव्योपदेशाद् अनेन जनेन लब्धमेतदौन्नत्यम्' इति सविनयं न्यवेदयत् । गुरुः तं शिष्यम् आशीर्भिः अनुगृह्य 'वत्स! सत्यमेव (वि) जयते । एतत् सर्वदा स्मर । न कदापि विस्मर ।' इति प्राबोधयत् ।



# उत्तमः धर्मः

काशीक्षेत्रं पवित्रक्षेत्रम् । तत् क्षेत्रं द्रष्टुं लक्षोप क्षं जनाः भक्त्या श्रद्धया च गच्छन्ति । यः काशीं गच्छति स कैलासं प्राप्नोति. तस्य पुनर्जन्म नास्तीति च भक्तानां विश्वासः । एकस्मिन् शिवरात्रिपर्वदिने काशीविश्वेश्वरं पूजितुम् आगतान् जनान् दृष्ट्वा पार्वती परमेश्वरं 'नाथ! ये काशीं गच्छन्ति ते कैलास मिति लोकोक्तिः । एते सर्वे कैलासं प्राप्स्यन्ति वा?' इत्यपृच्छत् ।

'न न । काशीयात्रिकाः सर्वे न कैलासयात्रिकाः भवेयुः । एतेषु ये कैलासं गमिष्यन्ति तान् निरूपयामि, पश्य' इत्यवदत् परमशिवः ।

सद्यः पार्वतीपरमेश्वरौ वृद्धदम्पती अभूताम् । शिवः नवति वर्षदेशीयश्चेत् पार्वती अशीतिवर्षदेशीया आसीत् । तौ विश्वेश्वरालयस्य मुखद्वारसमीपे स्थितौ । वृद्धा भर्तृशिरः स्वक्रोडे निधाय निषण्णा आसीत् । देवालयं ये गच्छन्ति तान् सम्बोध्य 'हे महाजनाः भक्तवराः! मम पतिः तृष्णया पीडितः अचेतनवत् अत्र पतितः । कृपया तस्मै किञ्चित् गङ्गाजलं ददतु । एषः प्राणापायस्थितौ अस्ति । अतः एनं त्यक्त्वा गन्तुम् अहं न शक्नोमि । तस्मात् कोऽपि जलं दत्त्वा मे पतिं जीवयतु । मम साहाय्यं करोतु ।' इति प्रार्थयति स्म ।

सर्वे भक्ताः गङ्गायां स्नात्वा आर्द्रवसनाः करपात्रेषु गङ्गाजलं स्वीकृत्य देवालयं प्रविशन्ति स्म । ते वृद्धायाः वचनानि श्रुत्वा 'किमिदं? विश्वेश्वरदर्शनार्थं गच्छताम् अस्माकं दरिद्रदेवता दर्शनम्?' इति मत्वा कतिपय भक्ताः तां परिहृत्य गताः । अन्ये केचित् 'तावत् तिष्ठ-यावद्वयं विश्वनाथं संसेव्य आगच्छामः' इत्युक्त्वा गताः । एवं न कश्चिदपि तस्याः प्रार्थनां सफलीकृतवान् ।

अत्रान्तरे एकश्चोरः तत्र आगतः । देवालयमुख-द्वारे जनसम्मर्दः महान् अस्ति । स्त्रीणां कण्ठहारान्, पुरुषाणां धनशिक्यानि च अपहर्तुं योग्यः समयः' इति चिन्तयन् तत्रागत्य वृद्धायाः दीनदीनं रोदनं श्रुत्वा समीपं गतवान् । पृष्टवान् च 'हे अम्ब! का भवती? अत्रं किमर्थमागता?' इति ।

एषः मम भर्ता । विश्वेश्वरदर्शनायैव आवां काशीं प्रति आगतौ । परन्तु मम पतिः पिपासया पीडितः मूर्च्छितः अस्ति । यदि कोऽपि किञ्चिज्जलं मुखे दद्यात् तर्हि स जीवति । सर्वान् अपि तैर्थिकान् तदर्थं पुनः पुनः याचे' इति सा कथितवती ।

झटित्येव स चोरः कक्षलोलात् अलाबूपात्रात् सलिलं दातुं सन्नद्धः आसीत् ।

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तदा सा वृद्धा 'वत्स! तिष्ठ! कदा वा मम पतिः मरिष्यतीति नाहं जाने । तत्सलिलदानात् पूर्वमेव त्वया कृतं पुण्यं प्रकटीकुरु । इयं मम वाञ्छा' इति उक्तवती । 'असत्यं तु न वक्तव्यम्' इति नियममपि सा कृतवती ।

चोरः किंकर्तव्यतामूढः आसीत् । सः क्षणं तूष्णीं स्थितः । ततः 'मातः! अहं अद्यावधि सर्वाणि अकार्याण्येव कृतवान् । एकमपि पुण्यकार्यं न कृतवान् । अयि मातः! इदानीम् अस्य वृद्धस्य मुखे जलं दातुमिच्छामि । इदमेक मेव पुण्यं मम जीवने' इति वदन् वृद्धायै जलं दत्तवान् ।

तत्क्षणमेव पार्वतीपरमेश्वरौ स्वस्वरूपं स्वीकृत्य तस्य पुरतः आविरभूताम् । 'इदं मानवजीवितं परोपकारार्थं मेव । न तु स्वार्थाय । त्वया बहूनि दुष्कृतानि कृतानि । परन्तु परेषां सेवैव परमात्मसेवेति मत्वा सत्यं वदसि, साहाय्यमपि करोषि । अद्य प्रभृति पवित्रो भूत्वा जीवनं यापय । सत्यात् परो धर्मः नास्ति । परोपकारात् परं देवपूजनं नास्ति' इति तस्मै आशीः दत्त्वा तौ अन्तर्हितौ अभवताम् ।

यः दयासिक्तः परसेवापरायणः स एव भक्तः । तस्य धर्मं एव उत्तमधर्मः ।



(क) 3

# प्रश्नत्रयम्

कश्चित् राजा स्वसमीपम् आगतान् सर्वान् प्रश्नत्रयं पृच्छति स्म । कः श्रेष्ठः? कः कालः श्रेष्ठः ? किं कार्यं श्रेष्ठम् ? इति ते त्रयः प्रश्नाः । बहवः बहूनि समाधानानि उक्तवन्तः । अथापि स तैः सन्तृप्तिं न प्राप्तवान् ।

एकदा राजा मृगयार्थं वनं गतः । तत्र पर्याप्तं कालं मृगयां चरित्वा श्रान्तो भूत्वा क्षुत्पिपासापीडितः वनस्थम् आश्रमं प्रविष्टवान् । तदा साधुः आश्रमलताभ्यः जलं ददाति स्म । सः साधुः श्रान्तं राजानं दृष्ट्वा, सपदि तत्कार्यं त्यक्त्वा राज्ञे स्वागतसत्कारान् कृतवान् । मधुराणि फलानि शीतलं जलं च दत्त्वा क्षुद्बाधां पिपासां च अपनीतवान् ।

तदानीमेव केचन साधवः एकं क्षतगात्रं स्रवद्रक्तं मनुष्यं भुजैः वहन्तः आश्रममानीतवन्तः । सत्वरं स साधुः राजानं त्यक्त्वा तत्र गतः । क्षतगात्रस्य क्षतानि श्रद्धया प्रक्षाल्य, पत्ररसान् तेषु विलेप्य, मधुरवाग्भिः मनश्शान्तिं कल्पयन् उपचारं कृतवान् । सः क्षतगात्रः साधोः परिचर्यया बाधां विस्मृत्य सुखं सुप्तवान् ।

अनन्तरं राजा निर्गन्तुकामः साधुवर्यस्यानुज्ञां स्वीकर्तुं तस्य समीपम् अगच्छत् । साधुरपि राज्ञे

आशिषः दत्त्वा निर्गमनाय अनुमतिं दत्तवान् । तदा राजा सविनयं प्रश्नत्रयम् उक्त्वा समाधानार्थी भूत्वा मौनमतिष्ठत् ।

'भो राजन् ! यद्यत् त्वया दृष्टं तत्तदेव तव प्रश्नानां समाधानं भवितुमर्हति' इति साधुः उक्तवान् ।

राजा विस्मितः सन् 'स्वामिन् ! नाहं सम्यक् ज्ञातवान् । स्पष्टतया वक्तुं प्रार्थये' इति प्रार्थितवान् ।

तदा साधुः राजानम् एवं प्रबोधयामास –

'राजन् ! यदा भवान् आश्रमं समागतः तदा अहं लताभ्यः जलप्रदानकर्मणि निरतोऽभवम् । स मम धर्मः । परं तदानीं भवान् अतिथिः भूत्वा आश्रमम् आगतः । अतिथीनाम् अभ्यागतानां च सादरसेवनं मम कर्तव्यं खलु । यावत् मया भवान् उपचारैः तोषितः, तावत् कश्चित् बाधापीडितः व्यक्तिविशेषः आनीतः । तस्य बाधानिवारणं तदा मम कर्तव्यम् । तस्मात् तस्य उपचारं कृतवान् । येषां येषां साहाय्यं नास्ति, सेवां च अपेक्षन्ते, तेषां सेवनेन, यथाशक्ति साहाय्येन च कालः पवित्रो भवति ।'

राजा स्वीय प्रश्नत्रयस्य चेत्थं समाधानं प्राप्तवान्। यः कर्तव्यं स्वीयं सम्यक् निर्वहति सः श्रेष्ठः मानवः। भूतभविष्यद्वर्तमानेषु वर्तमान काल एव श्रेष्ठः। गतमधिकृत्य विचारेण प्रयोजनं नास्त्येव। भविष्यत्कालः कथमस्तीति तु वयं न जानीम एव। यानि कार्याणि वर्तमानकाले कुर्मः, तान्येव भविष्यतः आधारभूतानि भवन्ति। अतः वर्तमानकालः श्रेष्ठः।

एवं प्रश्नानां समाधानानि मनसि धृत्वा राजा तदा प्रभृति आचरितुं निश्चित्य स्वनगरं प्रति प्रस्थितः आसीत्।



# शर्मिष्ठा

पुरा वृषपर्वो नाम राक्षसराजः दानवराज्यं पालयति स्म। देवानां बृहस्पतिरिव दानवानां गुरुः शुक्राचार्यः। अस्य महनीयस्य नीतिः शुक्रनीतिरिति लोके प्रसिद्धिं प्राप। दैत्यानामज्ञानान्धकारं शुक्रः ज्ञानप्रकाशेन निरासयति स्म।

वृषपर्वस्य प्रियपुत्री शर्मिष्ठा। शुक्राचार्यस्य प्रियदुहिता देवयानी। शर्मिष्ठादेवयान्योः स्नेहः आबाल्यात् आसीत्। ते एकोदरे इव प्रवर्तेते स्म।

एकदा सखीसमेता शर्मिष्ठा जलक्रीडार्थं सरोवरं गतवती। तत्र ताः सर्वाः अपि बहुकालं जलक्रीडाविनोद-मन्वभवन्। अमितोत्साहा देवयानी प्रथममेव तीरमासाद्य शर्मिष्ठायाः वस्त्रादिकम् अधरत्। तदनन्तरमागता शर्मिष्ठा स्वाभरणानि धृतवतीं देवयानीं क्रोधेन एवं निनिन्द – 'हले ! भिक्षुकि ! मम आभरणादि किमर्थं धृतवती ? किं त्वाम् आत्मानं राजपुत्रीं मन्यसे ? किं तव धैर्यम् ?' देवयानी प्रत्युत्तर मदात् – "मत्पिता तव राक्षससमूहस्य ज्ञानदाता। मत्पितरं विना राक्षसराज्य-मेव नास्ति। एतदविचिन्त्य कस्तव प्रलापः ?"

तदा शर्मिष्ठा क्रुद्धा 'हे ! अहङ्कारमदोन्मत्ते ! शृणु ! मत्पितुः दयया तव पिता त्वं च जीवतः । युवाभ्यां मज्जनकः भिक्षां ददाति । नोचेत् युवयोः जीवनमेव नास्ति । एतदविज्ञाय कथं प्रलपसि ?' इति देवयानीमभर्त्सयत् ।

अनेन भर्त्सनेन क्रुद्धा देवयानी 'अहं राज्ये पादं न न्यसेयम्' इति अरण्यं जगाम । एतत्सर्वं श्रुत्वा शुक्राचार्योऽपि भृशं खिन्नः वनं गत्वा पुत्रीं बहुधा सान्त्वयितुं प्रायतत । परं तु सा नगरम् आगन्तुं नाङ्गीचकार । 'त्वां विना अहं नगरे कथं स्थास्यामि । त्वमेव हि मम प्राणः' इत्युक्त्वा शुक्राचार्योऽपि वने एव तस्थौ ।

एतत्सर्वं श्रुत्वा राजा वृषपर्वः खिन्नः शुक्राचार्यम् उपेत्य यथापूर्वं नगरे स्थातुं प्रार्थितवान् । शुक्रस्तु देवयानीं विना आगन्तुं नैच्छत् । तदा स राजा देवयानीं नगरमागन्तुम् अनेकधा सान्त्वयामास । "हे ! गुरुपुत्रि ! मम पुत्रिकायाः अपराधं क्षमस्व । शुक्राचार्येण विना राक्षसलोकः सुखं न जीवति । अस्माकं ज्ञानदाता स एव खलु । भवतीं विना आचार्यः नगरसीमामपि स्प्रष्टुं नेच्छति । अतः राक्षसप्रजासु कृपां कृत्वा पित्रा सह पुरं प्रविश" इति सम्प्रार्थयत् ।

तदा देवयानी "तव पुत्री सखीसमक्षं मां पराभूतवती। अतः सा सखीशतपरिवृता अत्रागत्य कंचित्कालं मां सेवेत चेत् अहं पुनः नगरमायास्यामि। नोचेत् अत्रैव स्थास्यामि' इत्यवोचत्।

राजा सद्य एव पुरं गत्वा अन्तःपुरं प्रविश्य स्वदुहितरं देवयानीं सेवितुं लालनया उक्तवान्। परं सा नाङ्गीकृतवती। तदा सः 'हे पुत्रि! यद्येतत्कर्म तव गौरवभङ्गायेति चिन्तयसि, तर्हि राक्षसलोकः सर्वोऽपि अज्ञानान्धकारेण अचिरादेव नश्येत्। शुक्राचार्यं विना अस्माकं जीवनमेव नास्ति। अतः राज्यक्षेमः प्रधानं वा, तव गौरवं प्रधानं वेति सम्यक् परिशीलय। सम्यगालोच्य यथा ते रोचते तथा कुरु' इत्युक्त्वा विषादेन स्वभवनं जगाम।

गते पितरि शर्मिष्ठा एवमचिन्तयत्। 'अहो! कीदृशी परिस्थितिः? कथं राजपुत्री अहं तां सेवेयम्? एवं सति गौरवहानिरेव खलु। परं तु देवयानीं त्यक्त्वा शुक्राचार्यः नगरं नायास्यति। आचार्येण विना 'राक्षसानामस्माकम् अज्ञानतमः न नश्यति। मम हेतोः राज्यं नश्येत्। व्यक्तिगौरवापेक्षया समाजश्रेयः मुख्यं भवति। समाजक्षेमेणैव व्यक्तिक्षेमः नान्यथा। अतो मया देवयानी

सेवनीयैव' इति विचिन्त्य सखीशतपरिवृता वनं गत्वा देवयानीं क्षमां याचयित्वा कञ्चित् कालं देवयानीं संसेव्य तां शुक्राचार्येण सह नागरमानयत् । राजा वृषपर्वः, आचार्यः शुक्रश्च नितराम् अतुष्यताम् ।

पश्यत । व्यक्तेरपि समाज एव मुख्य इति निरूपितवती शर्मिष्ठा । एषा भावना सर्वदा सर्वेषां हृदयेषु भवेत् । तदैव सर्वेषां सुखं शान्तिश्च स्याताम् ।



# अग्रशिख

स भोजराजस्य पालनसमयः। तस्मिन् समये एकदा वृद्धब्राह्मणदम्पती भोजराजस्य आस्थानम् आगत्य "महाप्रभो ! अग्रशिख शब्दस्य अर्थः कः ?" इति पृष्टवन्तौ।

स्वयं भोजः महापण्डितः। तथापि 'अग्रशिख' शब्दस्य अर्थं न ज्ञातवान्। अनन्तरं स आस्थानकविपण्डितान् सर्वान् अपृच्छत्। तेऽपि न जानीमः इति प्रत्युत्तरं दत्तवन्तः। तेषु महाकविः काळिदास एव 'एतत् पदं साङ्केतिकं स्यात्' इति ऊहाम् अकरोत्। अनुक्षणमेव काळिदासः स्वाराध्यदेवतां कालीमातरं मनसा स्मृतवान्। तस्याः अनुग्रहेण अनुक्षणमेव काळिदासमुखात् एषः श्लोकः निर्गतः –

अनेन तव पुत्रस्य प्रसुप्तस्य वनान्तरे।
शिखामाक्रम्य पादेन खड्गेनाभिहतं शिरः॥

अनन्तरं काळिदासः भोजराजं प्रति इत्थम् उक्तवान् – 'महाराज ! तयोः एकः पुत्रः अस्ति। तस्य एकः स्नेहितः अप्यस्ति। तौ द्वौ विद्यार्थं काशीं गतवन्तौ।

एतयोः पुत्रं सर्वविद्यानिपुणं दृष्ट्वा तस्य स्नेहितः ईर्ष्या-द्वेषाविष्टः आसीत् । द्वावपि काशीतः यदा प्रत्यागच्छतः तदा एकस्मिन् वने प्रसुप्तस्य एतयोः पुत्रस्य शिखां पादेन आक्रम्य खड्गेन शिरः खण्डितवान् तस्य स्नेहितः । हननात् पूर्वमेव जागृतः एतयोः पुत्रः मरणकारणं पितरं ज्ञापयितुं श्लोकमिदं रचितवान् । एतं श्लोकं तथैव सः पितरं न निवेदयिष्यतीति श्लोकस्य चतुर्णां पादानाम् आद्याक्षराणि मेलयित्वा 'अप्रशिख' इति पित्रे निवेदयितु-मुक्तवान् । मन्दबुद्धिः तस्य स्नेहितः तस्य पदस्य अर्थं न ज्ञातवान् । अतः सः एतयोः समीपमागत्य 'भवत्पुत्रः मार्गे विषज्वरेण पीडितः 'अप्रशिख' इति वदन् मृत इति उक्तवान् ।'

कथा सम्यगस्ति । परन्तु एतत् सत्यम् इति कथं निर्धारणीयम् ? इति भोजराजः काळिदासम् अपृच्छत् ।

काळिदासस्य कोपः आगतः । अनुक्षणमेव काळिदासः कालीं मातरं ध्यातवान् । तस्याः अनुग्रहेण मेधाविनः तयोः दम्पत्योः पुत्रस्य शिरः कबन्धं च राजसभां प्रविष्टे । सर्वे आश्चर्येण पश्यन्ति स्म । क्षणे एव कबन्धे शिरः लग्नम् आसीत् । स च तयोः पुत्रः निद्रातः जागृत इव उत्थाय अप्रशिख अप्रशिख इत्युक्तवान् । तदा

भोजः तं अग्रशिख इत्युक्ते किमिति पृष्टवान् । स च काळिदासोक्तप्रकारेण समाधानं दत्तवान् । तदा सभासदः सर्वे आश्चर्यचकिताः आसन् ।

काळिदासस्य अनुग्रहेण आवयोः पुत्र जीवित इति वृद्धदम्पती काळिदासस्य बहुधा प्रशंसां कृत्वा स्वगृहं पुत्रेण सह गतवन्तौ । पश्यन्तु ! काळिदासस्य सामर्थ्यं कीदृशमिति ।



Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

# चतुरः शशकः

कस्मिंश्चित् अरण्ये भासुरकः नाम सिंहः वसति स्म। सः अतीव शक्तिमान्। सः विना कारणम् अनेकान् मृगान् प्रतिदिनं मारयति स्म। एतेन वने सर्वे मृगाः दुःखिताः आसन्। अतः एकदा ते सर्वे मृगाः भासुरकं प्रार्थितवन्तः - 'स्वामिन्! विना कारणम् एवं मृगाणां मारणेन को वा लाभः? यतः आहारार्थम् एकोऽपि मृगः भवते अलं किल। अतः अद्यारभ्य भवतः आहारार्थं प्रतिदिनम् एकैकं मृगं वयमेव प्रेषयामः। भवान् तं खादतु। अन्यमृगान् मा पीडयतु' इति। भासुरकः तेषां प्रार्थनामङ्गीकृत्य उक्तवान् – 'अस्तु। परन्तु यस्मिन् दिने मम समीपं मृगः कोऽपि नागच्छति तदा सर्वान् मृगान् मारयिष्याम्येव' इति।

तदनन्तरं प्रतिदिनं जातिक्रमेण एकैकः मृगः भासुरकस्य आहारार्थम् आगच्छति स्म। भासुरकः तं खादति स्म। अन्ये च मृगाः अरण्ये निर्भयं चरन्ति स्म।

कदाचित् जातिक्रमेण शशकस्य वारः आगतः। कश्चित् शशकः दुःखेन सिंहसमीपं प्रस्थितवान्। मार्गे एकः कूपः आसीत्। कूपस्य उपरि गच्छन् सः कूपे आत्मवः

प्रतिबिम्बं दृष्टवान् । तदा तस्य मनसि एकः उपायः स्फुरितः । 'अहं भासुरकम् एतस्मिन् कूपे पातयामि' इति चिन्तयित्वा मन्दं मन्दं विलम्बेन भासुरकसमीपं गतवान् ।

'अद्य मृगः समये नागतः' इति तदा नितरां क्रुद्धः आसीत् । शशकः मन्दं मन्दं गत्वा प्रणम्य तस्य पुरतः स्थितवान् । 'रे! शशकाधम! समये आगन्तव्य मिति ज्ञानमस्ति वा न वा? किमर्थमेतावान् विलम्बः? प्रथमं भवन्तं खादित्वा, ततः परं सर्वान् मृगान् मारयिष्यामि' इति सिंहः शशकं तर्जितवान् ।

शशकः सविनयमुक्तवान् – 'स्वामिन्! मया अपराधः न कृतः । भवतः समीपं समये आगन्तव्य मित्येव अहं प्रस्थितः । परन्तु मार्गे अन्यः एकः सिंहः आसीत् । सः मां पृष्टवान् – 'रे! कुत्र गच्छसीति । अहमुक्तवान् - 'भासुरकस्य आहारार्थं गच्छामी'ति । तदा सोऽवदत् – 'एतत् मम अरण्यम् । अत्र मृगाः मम आज्ञां पालयेयुः । भासुरकः कुत्र? स चोरसिंहः भवेत् । भवान् तमत्रानयतु । आवयोः मध्ये युद्धं भवतु । युद्धे यः जयति स एव भवन्तं खादतु' इति । तस्य सूचनानुसारम् अत्र आगतवान् । अत एव विलम्बः' इति ।

'एवं वा? तर्हि तम् इदानीम् एव मारयामि । स कुत्रास्ति? प्रदर्शयतु' इति भासुरकः पृष्टवान् । शशकः तं कूपसमीपं नीत्वा कूपं प्रदर्शितवान् । भासुरकः तत्र जले आत्मनः प्रतिबिम्बं दृष्ट्वा क्रोधेन गर्जितवान् । कूपात् इतोऽपि उच्चैः प्रतिध्वनिः आगतः । भासुरकः तं प्रतिबिम्बमेव आत्मनः प्रतिस्पर्धिनं मत्वा तं मारयितुं तस्य उपरि आक्रमणं कुर्वन् कूपे पतित्वा जले निमग्नः मृतश्च आसीत् । ततः परं सर्वे मृगाः निरातङ्का आसन् । शशकाः सर्वे तत्रैव कस्यचिज्जलाशयस्य समीपे एव सुखं निवसन्ति स्म ।

एवं कश्चित् कालः गतः । कदाचित् अनावृष्टि रासीत् । तत्कारणतः वने सर्वे जलाशयाः शुष्काः आसन्। केवलं शशकानां जलाशये एव जलम् आसीत् ।

तस्मिन् वने महान् गजयूथः आसीत् । स च तस्य राजा चतुर्दन्त इति आसीत् । गजयूथः जलमन्विष्यन् अन्विष्यन् एतज्जलाशयसमीपमागच्छत् । तत्र यथेष्ट जलं दृष्ट्वा सन्तुष्टाः गजाः जले समक्रीडन् । ततः उपरि आगत्य इतस्ततः समचरन् । तेषां सञ्चारेण तेषां पादाघातेन केषाञ्चित् शशकानां पादाः भग्नाः । पुनः केषाञ्चित् कटयः भग्नाः अन्ये । केचित् मृताः अपि ।

यदा गजाः स्वनिलयं गताः तदा सर्वे शशकाः सम्भूय मन्त्रालोचनं कृतवन्तः। गजानाम् आगमनं निरोद्धुम् उपायं चिन्तितवन्तः। तमुपायम् कार्ये अन्वेतुं लम्बकर्णं नाम शशकं नियुक्तवन्तः। पूर्वमपि स एव स्वबुद्धिकौशलेन सिंहम् अमारयत्।

लम्बकर्णः अनन्तरदिने गजानाम् आगमनमार्गे स्थितवान्। यदा चतुर्दन्तः स्वयूथेन सह आगच्छति स्म तदा लम्बकर्णः उक्तवान् – 'भोः दुष्टगज! किमर्थम् एव मत्रागच्छसि? एष भगवतः चन्द्रस्य जलाशयः। अतः अत्र नागन्तव्यम्' इति। चतुर्दन्तः पृष्टवान् – भवान् कः?' 'अहं लम्बकर्णः नाम शशकः। अहं चन्द्रमण्डले निवसामि। चन्द्रः मां दूतरूपेण भवतः समीपं प्रेषितवान्। चन्द्रसन्देशं स्वीकृत्य अहमत्रागतवान्' इत्युक्त्वा लम्बकर्णः चन्द्रसन्देशमित्थं श्रावितवान् – 'भवतां गमनागमनेन मम बान्धवानां पीडा भवति। अतः भवद्भिः इतः परम् अत्र नागन्तव्यम्। यदि आगच्छन्ति तर्हि दण्डयामि।' इति।

चन्द्रस्य नाम श्रुत्वा चतुर्दन्तः भीतः। स पृष्टवान् – 'इदानीं चन्द्रः कुत्र अस्ति?' इति शशकः उक्तवान् – 'ह्यः भवतां पादाघातेन व्रणितानां शशकानां

समाश्वासनाय आगतः अत्रैव जलाशयेऽस्ति । आगच्छतु । दर्शयामि' इति । ततः गजं जलाशयसमीपं नीतवान् । तदा रात्रिः आसीत् । जलमध्ये चन्द्रप्रतिबिम्बम् आसीत् । तत्प्रदर्श्य शशकः उक्तवान् – 'पश्यतु । इदानीं चन्द्रः ध्यानमग्नः अस्ति । यदि स ध्यानादुत्तिष्ठति तर्हि भवन्तं दण्डयिष्यत्येव । अतः शीघ्रमेव धावतु ।' इति ।

चन्द्रात् भीतः चतुर्दन्तः स्वयूथेन सह ततः धावितवान् । पुनः न कदापि तत्रागतवान् ।

एवं लम्बकर्णः स्वबुद्ध्या शशकानां प्राणरक्षणं कुर्वन् चिरकालम् आसीत् ।



# दुष्टैः सह वासः



कस्मिंश्चित् वने मदोत्कटो नाम सिंहः वसति स्म । गजः, काकः, शृगालश्च तस्य अनुचराः आसन् ।

एकदा क्रथनको नाम उष्ट्रः तद्वनम् आगतवान् । तं दृष्ट्वा सिंहस्य अनुचराः उक्तवन्तः – 'प्रभो! तम् उष्ट्रं मारयतु । तस्य मांसं खादामः' इति । सिंहः उक्तवान् – 'तथा न करणीयम् । सः अस्माकम् अतिथिः' । अनन्तरं सिंहः उष्ट्रम् समीपम् आहूय उक्तवान् – 'भोः! भवान् कुतः आगतः? क्रथनकः उक्तवान् - अहं समीपग्रामतः आगतवान् । सिंहः - 'भवान् पुनः ग्रामं मा गच्छतु । अत्र एव निर्भयं वसतु ।' इति उक्तवान् । क्रथनकः तथैव तैः सह वसति स्म ।

एकदा सिंहस्य अनारोग्यम् अभवत् । विशक्त्या स चलितुम् अपि असमर्थः आसीत् । अतः सः स्वानु-चरान् उक्तवान् – भोः! कमपि मृगम् आनयन्तु । तं मारयित्वा तस्य मांसं खादामः' । इति । अनुचराः बहु अन्वेषणं कृतवन्तः । परन्तु कोऽपि मृगः न लब्धः ।

तदा ते चिन्तितवन्तः कथञ्चित् एष उष्ट्रः मारणीयः इति। अनन्तरं शृगालः सिंहस्य समीपम् आगतवान्।

शृगालः – प्रभो! अन्यः मृगः न लब्धः। कृथनकम् एव मारयामो वा?

सिंहः – (क्रोधेन) मूर्ख! पुनः एवं मा वदतु। अहं कृथनकस्य अभयं दत्तवान्। सः न मारणीयः।

शृगालः – अभयं दत्वा मारणं चेत् दोष एव। परन्तु यदि स एव स्वामिकार्यार्थम् आत्मार्पणं करोति तस्य मारणे दोषो नास्ति।

सिंः – तर्हि यथा रोचते तथा करोतु।

अनन्तरं सिंहस्य अनुचराः सर्वे कृथनकेन सह पुनः सिंहस्य समीपम् आगताः।

काकः – प्रभो! आहारार्थं कोऽपि मृगः न लब्धः। अतः भवान् मां खादित्वा स्वप्राणान् रक्षतु। तेन ममापि स्वर्गप्राप्तिः भविष्यति।

शृगालः – भोः! काक! भवतः शरीरे अत्यल्पं मांसम् अस्ति। तत् महाराजाय

पर्याप्तं न भवति । (सिंहं प्रति) प्रभो! माम् एव खादतु ।

गजः – भोः! श्रृगाल! भवतः शरीरम् अपि अल्पमेव । तदपि महाराजाय पर्याप्तं न भवति । अतः महाराजः मां खादतु । अहं स्वामिकार्यार्थं प्राणार्पणं करोमि । मम स्वर्गप्राप्तिः भवतु ।

एतत् सर्वं श्रुत्वा क्रथनकः चिन्तितवान् – सर्वेऽपि 'मां खादतु मां खादतु' इति सिंहम् उक्तवन्तः । परन्तु सिंहः कमपि नाखादत् । अतोऽहमपि तथा विज्ञापयामि। सिंहः मामपि न खादिष्यति ।' अनन्तरं सिंहं प्रति उक्तवान् – प्रभो! गजस्य मांसं खादितुं बहुकष्टं भवति। अतो माम् खादतु । मम स्वर्गप्राप्तिः भवतु' इति ।

क्रथनकस्य वाक्यं यावत् न समाप्तं तावदेव ते अनुचराः तस्योपरि आक्रमणमकुर्वन् । तं हत्वा सन्तोषेण तस्य मांसं खादितवन्तः ।

अत एवोच्यते – 'दुष्टैः सह वासः न करणीयः' इति ।



# सत्यान्नास्ति परो धर्मः

आसीत् पुरा कश्चित् सत्यव्रतो नाम महाराजः। सः सत्यमेव जीवितधर्मं स्वीकृत्य, जीवितलक्ष्यं च समाचरन् सर्वेषाम् आदर्शो व्यराजत।

एकदा ब्राह्ममुहूर्ते शयनादुत्थाय नदीस्नानार्थं प्रस्थितः सिंहद्वारसमीपे काञ्चित् सुन्दरीं सवेगं बहिर्गच्छन्तीं दृष्ट्वा पृष्टवानेवम् 'अयि! सुन्दरि! का त्वं? राजभवनात् किमर्थं निर्गच्छसि?'। सा प्राह - 'भो! महाराज! अहं धनलक्ष्मीः। चिरात्तवैव भवनं मया मम निवासाय अङ्गीकृतम्। अधुना अहं भवनमिदं विहाय गन्तुमिच्छामि। कृपया मेऽनुमतिं देहि'। तस्याः वचनानि श्रुत्वा 'साधु! साधु! भवती यथामति गच्छतु पुनर्दर्शनाय' इति सविनयं प्राह।

परस्मिन् क्षणे महाराजः सत्यव्रतः पुरुषमेकं गच्छन्तं दृष्टवान्। तदा तं पुरुषमाहूय 'अयि! भो! कस्त्वं? कुतो मम भवनं त्यक्त्वा गच्छसि?' 'महाराज! मम नाम त्यागः। धने निष्क्रान्ते त्यागस्य कथं योगः? अतो मयापि गन्तु मेव सङ्कल्पितम्। ममापि प्रयच्छतु निर्गमनानुमतिं कृपया भवान्' इति स पुरुषः उक्तवान्। महाराजः तमपि झटिति निर्गन्तुमङ्गीचकार।

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



समनन्तरं कश्चित् सुन्दरः पुरुषः निर्गमनकर्मणि मग्नमनाः महाराजेन वीक्षितोऽभवत् । आश्चर्यमग्नो महाराजः तं सम्बोध्य 'को भवान् ? किमर्थं मम भवनं विहाय गन्तुं प्रवृत्तः ?' इत्यपृच्छत् । 'महाराज ! अहं सदाचारः । यत्र नास्ति धनं, यत्र नास्ति त्यागः तत्र सदाचारः कथं वर्तेत ? अतोऽहं निर्गच्छामि' इति समाधाय महाराजसम्मतिं च प्राप्य सोऽपि यथेच्छं गतः ।

द्वित्रिक्षणाभ्यन्तरे एव काञ्चिद्दिव्यां गच्छन्तीं विलोक्य विभ्रान्तो महाराजः "का त्वं कान्ते ? तव निर्गमनकारणं किम् ?' इति पृष्टवान् ।

साब्रवीत् – 'अहं कीर्तिः । महाराज ! भवान् त्यक्तधनत्यागसदाचारः । एवं स्थिते भवतः समीपे कथं कीर्तिरहं निवसामि ? अतो मम विर्गमनम् अनुजानीहि' । महाराजोऽपि तथेत्यङ्गीचकार ।

तदनन्तरं दिव्यपुरुषः कश्चित् तं प्रदेशं स्वरोचिभिः अलञ्चकार । तं दृष्ट्वा प्रभुरपृच्छत् – 'अयि ! भोः ! को भवान् ? किमर्थं गच्छति ?" इति । 'महाराज! धनं गतम् । त्यागोऽपि गतः । सदाचारोऽपि नास्ति,

कीर्तिरपि निर्गता। अतः सत्यनामकेन मयात्र किमर्थं स्थातव्यम्? एकाकी भूत्वा कथं वसेयम्? अतो मामपि गन्तुम् अनुजानीहि' इति स पुरुषः उक्तवान्। महाराजः ससम्भ्रमं तस्य पुरुषस्य पादयोः पतित्वा 'मा मा त्वं मा याहि। अहं त्वां नानुमन्ये। त्वदृते जीवितुं नाहं शक्नोमि। मास्तु धनम्। मास्तु त्यागः। मास्तु सदाचारः। मास्तु कीर्तिः। परन्तु त्वां विना मम जीवितमेव निष्फलं भवेत्। नाहं कदापि त्वां जहामि। कृपया त्वं तिष्ठ' इति प्रार्थयामास। महाराजं प्रति प्रसन्नः सत्यनामकः दिव्यपुरुषः तथेत्युक्त्वा भवनं पुनः प्राविशत्।

सपदि "कुत्र सत्यनामकः? कुत्र सत्यनामः?" इत्येवं पृच्छन्तः धन-कीर्ति-त्याग-सदाचाराः राजभवनं प्रति समाजग्मुः। तदा महाराजः "कथमिदं सपदि भवतां प्रत्यागमनम्" इति पृष्टवान्।

तदा धनलक्ष्मीः 'महाराज! सत्यमनुसृत्य, तस्य चाश्रयं स्वीकृत्य धनलक्ष्मीः राराजते। सत्यं विहाय नाहं जीवनं सार्थकं वहामि। सत्यस्य वियोगमपि न सहे। अत एव मया प्रत्यागतम्। भवनं प्रवेष्टुम् अनुमतिं ददातु' इत्यवोचत्।

त्यागोऽपि 'प्रभोः सत्यसहितस्य त्यागस्य सार्थकता भवति। सत्येन विना त्यागेन किं प्रयोजनम् ? केवलं डम्ब एव भवति। सत्येन सह स्थातुम् अनुजानीहि' इत्यवदत्।

तथैव सदाचारोऽपि समागत्य सम्प्रार्थितवान् – 'सत्येन विना सदाचारः दुराचार एव भवति। कृपया भवान् मामनुगृह्णातु' इति।

कीर्तिरागत्य 'प्रभो ! क्षमस्व। कीर्तिभवनस्य चत्वारः स्तम्भाः धन-त्याग-सत्य सदाचाराः भवन्ति। तान् स्तम्भान् विमुच्य कीर्तिभवनं कुत्रापि न प्रतिष्ठितं भवति। अतो मयि अपि प्रसीद' इति निवेदयामास।

सत्यव्रतमहाराजः सर्वेभ्यः सम्मतिं दत्वा महान्तं सन्तोषं प्राप। अस्माभिरत्र ज्ञातव्यमिदं यत् यदि सत्य-मनुष्ठीयते धनत्यागसदाचारकीर्तयः सार्थकाः भवन्ति। अत एव "सत्यान्नास्ति परो धर्मः" इति वदन्ति।



# दृष्टिभेदः



एकदा महाराज जनकः एकां पण्डितसभां कृतवान् । सभायां बहवः महान्तः समागताः आसन् । वाद-प्रतिवादकुशलता अपि तेषु आसन् । तत्र क्रियमाणः वादः अपि अत्युच्चस्तरीयः आसीत् । अतः सामान्यस्य पण्डितस्य वा मानवस्य तत्र प्रवेशार्हतैव नासीत् ।

तादृशीं सभां प्रवेष्टुम् अष्टावक्रः प्रायतत । परम् अष्टावक्राय अवकाशं कः प्रयच्छति ? तस्मै तत्र कोऽपि प्रशंसको वा अनुप्रेषको वा नास्ति । कोऽपि सहायः नास्ति । भगवानेव एकैकसहायः इति तस्य विश्वासः । भगवति यः विश्वसति तस्य न कदापि कष्टं वा नष्टं वा भवति । प्रत्युत अभीष्टं सिद्ध्यति । कदाचित् अभीष्टसिद्धौ केऽपि अवरोधाः भवेयुः तर्हि तेऽपि भविष्यन्त्याः सिद्धेः कारणान्येव भवेयुः ।

अष्टावक्रः दिनत्रयं यावत् जनकस्य सभाभवनस्य द्वारे प्रतीक्षां कृतवान् । सभाम् आगच्छन्तः पण्डिताः सर्वे तं पश्यन्तोऽपि न पश्यन्ति । इयद्भ्यः सभाया-मवकाशः लब्धश्चेत् मह्यमपि लभ्यत एवेति मत्वा सः तथैव निरीक्षां कुर्वन् आसीत् ।

कश्चित् पण्डितः अस्य इच्छां ज्ञात्वा महाराजाय निवेदयामास। अष्टावक्रः न वयसा वृद्धः। मध्यवयस्य इव दृश्यते। अनुभवरहित इव अनुमीयते। अयमनुभवी, अयं नेति दर्शनेन कथं ज्ञायेत ? अहेः पदगतिम् अहिरेव जानाति। अतः अष्टावक्रोऽपि कश्चिन्महात्मैव भवेदिति सम्भाव्य महाराजः तं सभान्तः समानेतुम् आज्ञापयत्।

यदा अष्टावक्रः सभां प्राविशत् तदा संवादः गम्भीरः प्रचलति स्म। यदा तस्य विकृतं रूपं सर्वेषां दृग्गोचरम् आसीत् तदा महाराजं विहाय सर्वे उच्चैः हसितवन्तः। महाराजः सर्वं परिशीलयन्नासीत्। अष्टावक्रः सर्वान् पण्डितान् अतिक्रम्य उच्चैः अहसत्।

तदा पण्डिताः सर्वे विभ्रान्ताः आसन्। 'विरूपं दृष्ट्वा वयम् अहसाम। एषः किमर्थं हसति ?' इति संशयापन्नाः अभवन्। तेषु कश्चित् अष्टावक्रमेव पृष्टवान् 'किमर्थं हसति भवान् ?' इति।

तदा अष्टावक्रः प्रत्यवदत् – 'अयि भोः! अत्र पण्डिताः सन्तीति श्रुत्वा महाप्रयत्नेन अत्रागतः। आगत्य चात्र भवादृशान् दृष्टवान्। अत्र न खलु पाण्डित्यपुष्टाः,

किन्तु केवलं चर्मकारा एव समाविष्टाः इति ज्ञात्वा जातहासोऽभवम्' इति ।

तस्य वचनानि श्रुत्वा सभास्ताराः क्रुद्धाः आसन् । चर्मकाराः नाम पादरक्षानिर्माणकर्मकराः । तत्पदश्रवणेन ते अत्यन्तं रुष्टाः । तेषां स्थितिं दृष्ट्वा अष्टावक्रः 'अयि भोः ! यत्पदं समुचितं भवति भवतां प्रवृत्तेः तदेव मया प्रयुक्तम् । चर्मकारा एव चर्ममर्मं जानन्ति । नान्ये । भवन्तः सर्वे मम चर्म परिशील्य हसितवन्तः । यूयं नूनं चर्मवासनावासिताः । अत एव मम पाण्डित्यं परिशीलयितुं प्रयत्नं न कृतवन्तः । पण्डिताः अन्तर्दृष्टि-मण्डिताः भवन्ति । नतु बहिर्दृष्टिनिरताः विरताः ।' इत्युक्तवान् ।

तदा जनकः तस्य सामर्थ्यमवगम्य 'हे महर्षे ! सभायां तव पाण्डित्यं प्रदर्शये' ति प्रार्थितवान् ।

तदा अष्टावक्रः इत्थं सभायां स्वप्रतिभां प्रदर्शितवान् । "पश्यतीति पशुः । पशूनां बाह्यदृष्टिरेव भवति । मननात् मानवः । अतः मानवाः अन्तर्दृष्टि-विशिष्टाः भवन्ति । लोके अस्मिन् बाह्यदृष्टिमेव अभिवर्धयन्तः जनाः तमेव आश्रयं स्वीकुर्वन्ति । प्रयत्नतः

सज्जनैः अन्तर्दृष्टिः विधेया। केचन स्वदेहसौन्दर्ये, शक्ति सामर्थ्ययोश्च प्रगाढं विश्वासं वहन्ति। आत्मनः महत्त्वं मन्वन्ति। परन्तु भगवान् मानसिकपरिशुद्धिं पश्यति। तथैव प्रेमपूर्णं हृदयं पश्यति। प्रशान्तस्वभावं च पश्यति। अतः अन्तर्दृष्टिम् अभिवर्ध्य अन्तर्भावान् प्रशान्तमनोहरान् कर्तुं पण्डितैः प्रयतनीयम्। तदा एव ते पण्डिताः भवेयुः।' इति। सर्वे सभास्तराः मन्त्रमुग्धा इव तस्य उपदेशम् श्रुतवन्तः। तस्य सामर्थ्यं ज्ञात्वा प्रशंसामपि कृतवन्तः।



# ध्रुवचरितम्

पुरा बभूवतुः प्रियव्रतोत्तानपादौ नाम मनोः स्वायम्भुवस्य द्वौ पुत्रौ। तयोरुत्तानपादस्य द्वे महिष्यौ आस्तां सुरुचिः सुनीतिरिति। तयोः सुरुचिः राज्ञः अत्यन्तं प्रियतमा आसीत्। तस्याः सुतः उत्तम अपि राज्ञोऽत्यन्तं प्रिय आसीत्। सुनीतेः तनयस्तु ध्रुवः।

ध्रुवः एकदा पितुरङ्के स्थितमुत्तमं दृष्ट्वा स्वयं पितुरङ्के स्थातुम् अकामयत। भूपतिस्तु उत्सङ्गारोहणोत्सुकं पुत्रं ध्रुवं सुरुच्याः प्रत्यक्षप्रणयेव नाभ्यनन्दत्। पितुरङ्कम् आरोढुमुत्सुकं ध्रुवं सुरुचिरपि इत्थं भर्त्सयामास – 'अन्य-स्त्रीगर्भजातस्त्वं किमर्थं वृथा प्रयत्नं करोषि? एतद्राज्यासनं सर्वभूभृत्संश्रयकेतनं ममैव पुत्रस्य योग्यम्। सुनीत्यामात्मनो जन्म किं त्वया नावगम्यते?'।

निशम्य तानि कटुवचनानि सपत्नीमातुः, रुदन् ध्रुवः मातरमुपगम्य वृत्तान्तं न्यवेदयत्। तदा खिन्ना दीना सुनीतिरुवाच – 'तात! नोद्वेगः कर्तव्यः। यद्भवता पुराकृतं तत्कोऽपहर्तुं शक्नोति? राजासनं राजच्छत्रं वराश्ववारणाः यस्य पुण्यानि तस्यैते इति मत्वा एतत् क्षमस्व। यदि ते दुःखमत्यर्थं वचसाऽभवत्। सुरुच्याः, तत्पुण्योपचये कुरु यत्नं सर्वफलप्रदे। सुशीलो भव। धर्मात्मा प्राणहिते रतो भव। पुण्यवन्तं सम्पदः स्वयमेवोपगच्छन्ति।'

तदा ध्रुवः प्रत्यवोचत् – 'अम्ब! यत्त्वमिदं मम दुःखप्रशमाय उक्तवती नैतत् मम हृदये तिष्ठति । अतः

सोऽहं तथा यतिष्ये यथा सर्वोत्तमोत्तमम् ।
स्थानं प्राप्स्याम्यशेषाणां जगतामभिपूजितम् ॥
सुरुचिः दयिता राज्ञः तस्याः जातोऽस्मि नोदरात् ।
अम्ब प्रभावं पश्य त्वं जातस्यापि तवोदरे ॥

उत्तमः तवोदरेऽनुत्पन्नोऽपि मम भ्रातैव । स पित्रा दत्तं राजासनमाप्नोतु । अन्यस्मै दत्तं स्थानमहं नेच्छामि । मम पितापि यत्स्थानं न प्राप्तवान्, तादृशं स्थानमहं प्राप्स्यामि ।' ततः ध्रुवः मातरं प्रणम्य मन्दिरात् निर्गत्य, अरण्यं प्राप्य, अभिमुखमागतान् सप्तऋषीन् प्रणम्य, तैः पृष्टः निजवृत्तान्तमावेद्य पुनस्तानित्थ-मवोचत् –

"नाहमर्थमभीप्सामि न राज्यं न च वैभवम् ।
तत्स्थानमेकमिच्छामि भुक्तं नान्येन यत्पुरा ॥

अतः तत्प्राप्त्युपायमावेदयन्तु । तच्छ्रुत्वा ते च ऋषयः प्रसन्नाः मन्त्रोपदेशं कृत्वा विष्णोराराधनं कुर्विति आज्ञाप्य यथाभिमतमगच्छन् । ध्रुवोऽपि अत्यन्तनिष्ठया

'हिरण्यगर्भपुरुषप्रधानाव्यक्तरूपिणे ।
ओं नमो वासुदेवाय शुद्धज्ञानस्वरूपिणे ।।'

इति जपन् मधुवने घोरं तपस्तप्तवान् । तस्य तपः मेदिनी सोढुमक्षमा अभवत् । सा पर्वतैः सह चचाल । देवा अपि परमाकुलाः इन्द्रेण सह सम्मन्त्र्य तस्य ध्यानभङ्गं कर्तुं प्रायतन्त । ते मायाविनीं सुनीतिं सृष्ट्वा तमुद्देशं प्रेषितवन्तः । सा च मायाविनी सुनीतिः सास्रा समागत्य ध्रुवमित्थमवदत् - 'पुत्र! अस्मात् दारुणात् निवर्तस्व । त्वं मया बहुभिः मनोरथैः लब्धः । नार्हसि त्वं दीनामेकां मामनाथां कर्तुम् । सपत्नीवचनात् अगतेः त्वमेव मम गतिः । इदानीं वयस्ते तपसो न । यदि परित्यजसि न तपः, तर्हि त्यक्ष्यामि प्राणानत्रैव' इति । एवं प्रलपन्तीं ताम् अग्रे स्थितां पश्यन्नपि ध्रुवः विष्णौ एव दत्तचित्तः न दृष्टवान् । तस्याः वचनानि न श्रुतवान्। ततः रक्षांसि घोराणि ज्वालामालाकुलैः मुखैः उग्रशस्त्रैश्चाविर्भूतानि । परन्तु तानि रक्षांसि, तेषामायुधानि वा ध्रुवं किमपि कर्तुं नाशकन् ।

एवं सर्वासु मायासु विलीनासु भीताः सुराः श्रीहरिं शरणमुपगम्य ध्रुवं तपसः निवर्तयितुं सम्प्रार्थयन् । तदा

श्रीहरिः 'भवत्सु कस्यापि स्थानं ध्रुवो नेच्छति । भीतिर्मास्त्वि' ति तान् स्वधाम सम्प्रेष्य, ध्रुवस्य पुरतः आविर्भूय 'प्रसन्नोऽस्मि, वरं वृणीष्व' इत्यवोचत् ।

देवदेवस्य वचः श्रुत्वा बालकः ध्यानगम्यं हरिमग्रे दृष्ट्वा पादयोः प्रणम्य तं स्तोतुमैच्छत् । बालकः सः यथाकामं स्तोतुमशक्तः हरिमेव शरणं ययौ । तदा हरिणा सप्रेम स्पृष्टः ध्रुवः विविधस्तोत्रैः हरिं समतोषयत्।

सन्तुष्टश्च हरिः 'अभीष्टं वरं वरये' त्युक्तवान् । तदा ध्रुवः सपत्नीमातुः भर्त्सनं श्रावयित्वा 'महयमुत्तमोत्तमम् अव्ययं स्थानं प्रयच्छत्वि'ति प्रार्थयामास ।

तदा हरिः 'यत्स्थानं प्रार्थयसि तदवश्यं प्राप्स्यसि । गते जन्मनि त्वं मदाराधकः ब्राह्मणः आसीः । तव कालेन कश्चित् राजपुत्रः मित्रमभवत् । तं दृष्ट्वा त्वमपि 'राजपुत्रो भवेयमहमपी'ति वाञ्छा आसीत् । अतः उत्तानपादस्य पुत्रोऽसि । मयि मन आवेश्य यः मामाराधयति तस्याभीष्टं निश्चितम् । मत्प्रसादात् त्वं सूर्य चन्द्रबुधकुजगुरुशुक्रशन्यादीनां ग्रहाणां, सर्वनक्षत्राणां,

सप्तर्षीणाम् सुराणां च स्थानात् उपरि स्थानं प्राप्स्यसि। भवतः स्थानं कल्पस्थायि च। माता ते सुनीतिरपि आसन्ना अतिनिर्मला तारका भूत्वा निवत्स्यति तावत्कालम्। ये च मानवाः भवन्तं प्रातः सायं च सुसमाहिताः कीर्तयिष्यन्ति तेषां चापि भवति महत्पुण्यम्' इत्युक्त्वा अन्तर्हितोऽभूत्। ध्रुवश्च सपदि अभीष्टं स्थानं प्राप्य इदानीमपि विराज्यते। अतः ज्ञायते 'प्रयत्नशीलस्य असाध्यं किमपि नास्ती'ति।



परिचयाभिज्ञविचक्षणसमर्थपरीक्षा
पाठ्यपुस्तकानि सभायां लभ्येरन्



# गैर्वाणी

मासिकी पत्रिका
सुलभा, मनोहरा, बालैः, प्रौढैः च अपेक्षणीया ।
वार्षिकम् १५–००



प्राप्तिस्थानम् –

संस्कृतभाषाप्रचारिणीसभा, चित्तूरु.
(आं. प्र.)

विजय मुद्राशाला, चित्तूरु (आ. प्र.) फोन् 2113